# तैत्तिरीयारगयक

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्वदेवाः
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु
ॐ शान्तिः शान्तिः शान्तिः

प्रपाठक १ अनुवाक १

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्वदेवाः
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु
आपमापामपः सर्वाः । अस्मादस्मादितोऽमुतः १

अग्निर्वायुश्च सूर्यश्च । सह संचस्करर्द्धिया । वाय्वश्वा रश्मिपतयः । मरीच्यात्मानोऽद्रुहह । देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत । महानाम्नीर्महामानाः । महसोमहसः स्वाः । देवीः पर्जन्यसूवरीः । पुत्रवत्त्वाय मे सुत २

अपाश्न्युष्णिमपा रक्षः । अपाश्न्युष्णिमपा रघम् । अपाघ्रामप चावर्त्तिम् । अप देवीरितो हित । वज्रं देवीरजीतांश्च । भुवनं देवसूवरीः । आदित्यानदितिं देवीम् । योनिनोर्ध्वमुदीषत । शिवा नः शंतमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम संदृशि ३
अमुतः सूतौषधयो द्वे च

अनुवाक २

स्मृतिः प्रत्यक्षमैतिह्याम् । अनुमानश्चतुष्टयम् । एतैरादित्यमगडलम् । सर्वैरेव विधास्यते । सूर्यो मरीचीमादत्ते । सर्वस्माद्भुवनादधि । तस्याः पाकविशेषेण । स्मृतं कालविशेषणम् । नदीव प्रभवात्का चित् ।

अद्मय्यात्स्यन्दते यथा ४

तां नद्योऽभि समायन्ति । सोरुः सती न निवर्तते । एवं नानासमुत्थानाः । कालाः संवत्सरं श्रिताः । अणुशश्च महशश्च । सर्वे समवयन्त्रि तम् । स तैः सर्वैः समाविष्टः । उरुः सन्न निवर्तते । अधि संवत्सरं विद्यात् । तदेव लक्षणे ५

अणुभिश्च महद्भिश्च । समारूढः प्रदृश्यते । संवत्सरः प्रत्यक्षेण नाधिसत्त्वः प्रदृश्यते । पटरो विक्लिधः पिङ्गः । एतद्वरुणलक्षणम् । यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते । एकं हि शिरो नामा मुखे । कृत्स्नं तदृतुलक्षणम् ६

उभयतः सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते । शुक्लकृष्णे संवत्सरस्य । दक्षिणवामयोः पार्श्वयोः । तस्यैषा भवति । षुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी घौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विवति । नात्र भुववम् । न पूषा । न पशवः । नादित्यः संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात् । एतद्वै संवत्सरस्य प्रियतमं रूपम् । योऽस्य महानर्थ उत्पत्स्यमानो भवति । इदं पुण्यं कुरुष्वेति । तमाहरं दद्यात् ७ यथा लक्षण ऋतुलक्षणं भुवनं सप्त च

## अनुवाक ३

साकंजानां सप्तथमाहुरेकजम् । षडुद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः । को नु मर्या अमिथितः । सखा सखायमब्रवीत् । जहाको अस्मदीषते । यस्तित्याज सखिविदं सखायम् । न तस्य वाच्यपि भोगो अस्ति । यदीं शृणोत्यलकं शृणोति ८

न हि प्रवेद सुकृतस्य पन्थामिति । ऋतुर्ऋतुना नुद्यमानः । विननादाभिधावः । षष्टिश्च त्रिंशका वल्गाः । शुक्लकृष्णौ च षष्टिकौ । सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिः सह । संवत्सरस्य सवितुः । प्रैषकृत्प्रथमः स्मृतः अमूनादयतेत्यन्यान् ९

अमूंश्च परिरक्षतः । एता वाचः प्रयुज्यन्ते । यत्रैतदुपदृश्यते । एतदेव

विजानीयात् । प्रमाणं कालपर्यये । विशेषणं तु वक्ष्यामः । ऋतूनां तन्निबोधत । शुक्लवासा रुद्रगणः । ग्रीष्मेणावर्तते सह । निजहन्पृथिवीं सर्वाम् १०

ज्योतिषाऽप्रतिख्येन सः । विश्वरूपाणि वासांसि । आदित्यानां निबोधत । संवत्सरीणं कर्मफलम् । वर्षाभिर्ददतां सह । अदुःखो दुःखचक्षुरिव । तद्मा पीत इव दृश्यते । शीतेनाव्यथ्यन्निव । रुरुदक्ष इव दृश्यते । ह्लादयते ज्वलतश्चैव । शाम्यतश्चास्य चक्षुषी । व्या वै प्रजा भ्रंश्यन्ते । संवत्सरात्ता भ्रंश्यन्ते । याः प्रति तिष्ठन्ति । संवत्सरे ताः प्रति तिष्ठन्ति । वर्षाभ्य इत्यर्थः ११ शृणोत्यन्यान्सर्वामेव षट्च

अनुवाक ४

अक्षिदुःखोत्थितस्यैव । विप्रसन्ने कनीनिके । आङ्क्ते चाद्गणं नास्ति । ऋभूणां तन्निबोधत । कनकाभानि वासांसि । अहतानि निबोधत । अन्नमश्नीत मृज्मीत । अहं वो जीवनप्रदः । एता वाचः प्रयुज्यन्ते । शरद्यत्रोपदृश्यते १२

अभिधून्वन्तोऽभिघ्नन्त इव । वातवन्तो मरुद्गणाः । अमुतो जेतुमिषुमुखमिव । संनद्धाः सह ददृशो ह । अपध्वस्तैर्वस्तिवर्णैरिव । विशिखासः कपर्दिनः । अक्रुद्धस्य योत्स्यमानस्य । क्रुद्धस्येव लोहिणी । हेमतश्चक्षूषी विद्यात् । अक्ष्णयोः क्षिपणोरिव १३

दुर्भिक्सं देवलोकेषु । मनूनमुदकं गृहे । एता वाचः प्रवदन्तीः । वैद्युतो यान्ति शैशिरीः । त अग्निः पवमाना अन्वैक्षत । इह जीविकामपरिपश्यन् । तस्यैषा भवति । इहेह वः स्वतपसः । मरुतः सूर्यत्वचः । शर्म सप्रथा आवृणे १४

दृश्यत इवावृणे अनुवाक ५ अतिताम्राणि वासांसि । अष्टि वज्रिशतघ्नि च । विश्वे देवा विप्रहरन्ति । अग्निजिह्वा असश्चत् । नैव देवो न मर्त्यः । न राजा वरुणो विभुः । नाग्निर्नेन्द्रो न पवमानः । मातृक्कच्चन विद्यते ।

दिव्यस्यैका धनुरार्त्निः । पृथिव्यामपरा श्रिता १५

तस्येन्द्रो वम्रिरूपेण । धनुर्ज्यामच्छिनत्स्वयम् । तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः । रुद्रस्य त्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत् । तस्माद्यः सप्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैनं रुद्र आरुको भवति । य एवं वेद १६

श्रिता यजते त्रीणि च अनुवाक ६अत्यूर्ध्वाक्षोऽतिरश्चात् । शिशिरः प्रदृश्यते । नैव रूपं न वासांसि । न चक्षुः प्रतिदृश्यते । अन्योन्यं तु न हिंस्रातः । सतस्तद्देवलक्षणम् । लोहितोऽक्ष्णि शार शीर्ष्णिः । सूर्यस्योदयनं प्रति । त्वं करोषि न्यञ्जलिकाम् । त्वं करोषि निजानुकाम् १७

निजानुका मे न्यञ्जलिका । अमी वाचमुपासतामिति । तस्मै सर्व ऋतवो नमन्ते । मर्यादाकरत्वात्प्र पुरोधाम् । ब्राह्मण आप्नोति । य एवं वेद । स खलु संवत्सर एतैः सेनानीभिः सह । इन्द्राय सर्वान्कामानभिवहति । स द्रप्सः । तस्यैषा भवति १८

चव द्रप्सो अंशुमतीमतिष्ठत् । इयानः कृष्णो दशभिः सहस्रैः । आवर्तमिन्द्रः शच्या धमन्तम् । उप स्नुहि तं नृमणामथ द्रामिति । चेतयैवेन्द्रः सलावृक्या सह । असुरान्परिवृश्चति । पृथिव्यंशुमती । तामन्ववस्थितः संवत्सरो दिवं च । नैवंविदुषाचार्यान्तेवासिनौ । अन्योन्यस्मै द्रुह्यताम् । यो द्रुह्यति । भ्रश्यते स्वर्गाल्लोकात् । इत्यृतुमण्डलानि । सूर्यमण्डलान्याख्यायिकाः । अत ऊर्ध्वं सनिर्वचनाः १९ निजानुकां भवति द्रुह्यातां पञ्च च

अनुवाक ७

Remainder of first prapāṭhaka and prapāṭhakas two and three as well as prapāṭhakas 6 through 10 are still under preparation and are not yet included.

# प्रपाठक ४

## प्रवर्ग्यमन्त्राः

### अनुवाक १

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परा दुर्मांहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादाम् १ वैश्वदेवीं वाचमुद्यासँ शिवामदस्तां जुष्टां देवेभ्यः २ शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती ३ भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये ४ तस्मा अहमिदमुपस्तरण-मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासम् ५ प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम् ६ मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु ७

ॐ शान्तिः शान्तिः शान्तिः ८

### अनुवाक २

युञ्जते मन उत युञ्जते धियः । विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इत् । मही देवस्य सवितुः परिष्टुतिः १ देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामा ददे २ अभ्रिरसि नारिरसि । अध्वरकृद्देवेभ्यः ३ उत्तिष्ठ ब्रह्मणस्पते । देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदानवः । इन्द्र प्राशूर्भवा सचा ४ प्रैतु ब्रह्मणस्पतिः । प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं । देवा यज्ञं नयन्तु नः ५ देवी द्यावापृथिवी अनु मे मँसाथाम् ६ ऋध्यासमद्य । मखस्य शिरः ७ मखाय त्वा । मखस्य त्वा शीर्ष्णे ८ इयत्यग्र आसीः ९ ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे १० देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः ११ ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे १२ इन्द्रस्यौजोसि । ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे १३ अग्निजा असि प्रजापते रेतः । ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे

१४ आयुर्धेहि प्राणं धेहि । अपानं धेहि व्यानं धेहि । चक्षुर्धेहि श्रोत्रं धेहि । मनो धेहि वाचं धेहि । आत्मानं धेहि प्रतिष्ठां धेहि । मां धेहि मयि धेहि १५ मधु त्वा मधुला करोतु १६ मखस्य शिरोऽसि १७ यज्ञस्य पदे स्थः । गायत्रेण त्वा छन्दसा करोमि । त्रैष्टुभेन त्वा छन्दसा करोमि । जागतेन त्वा छन्दसा करोमि । मखस्य रास्नासि । अदितिस्ते बिलं गृह्णातु । पाङ्क्तेन छन्दसा । सूर्यस्य हरसा श्राय । मखोऽसि । पते शिरः ऋताव-रीर्ऋध्यासमद्य मखस्य शिरः शिरः शिरोऽसि नव च । इयति देवीरिन्द्रस्यौ-जोऽस्यग्निजा अस्यायुर्धेहि प्राणं पञ्च

## अनुवाक ३

वृष्णो अश्वस्य निष्पदसि । वरुणस्त्वा धृतव्रत आधूपयतु । मित्रावरुण-योर्ध्रुवेण धर्मणा १ अर्चिषे त्वा । शोचिषे त्वा ।ज्योतिषे त्वा । तपसे त्वा २ अभीमं महिना दिवम् । मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् । मित्रस्य चर्षणीधृतः । श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् ३ सिद्ध्यै त्वा ४ देवस्त्वा सवितोद्वपतु । सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या ५ अपद्यमानः पृथिव्याम् । आशा दिश आपृण । उत्तिष्ठ बृहन्भव । ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम् ६ सूर्यस्य त्वा चक्षुषान्वीक्षे । ऋजवे त्वा । साधवे त्वा । सुक्षित्यै त्वा भूत्यै त्वा ७ इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि ८ गायत्रेण त्वा छन्दसाच्छृणद्मि । त्रैष्टुभेन त्वा छन्दसाच्छृणद्मि । जागतेन त्वा छन्दसाच्छृणद्मि । छृणत्तु त्वा वाक् । छृणत्तु त्वोर्क् । छृणत्तु त्वा हविः । छृन्धि वाचम् । छृन्ध्यूर्जम् । छृन्धि हविः ९ देव पुरश्चर सध्यासं त्वा १० पृथिवीं भव वाक्षट्च

## अनुवाक ४

ब्रह्मन्प्रवर्ग्येण प्र चरिष्यामः । होतर्घर्ममभि ष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधि श्रय । प्रतिप्रस्थातर्वि हर । प्रस्तोतः सामानि गाय १यजुर्युक्तँ सामभिराक्तखं त्वा । विश्वैर्देवैरनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पारयिष्णुम् । स्तुभो वहन्तु सुमनस्यमानम् । स नो रुचं धेह्यहृणीयमानः । भूर्भुवः सुवः । ओमिन्द्रवन्तः प्र चरत २ अहृणीयमानो द्वे च

## अनुवाक ५

ब्रह्मन्प्र चरिष्यामः । होतर्घर्ममभि ष्टुहि १यमाय त्वा मखाय त्वा । सूर्यस्य हरसे त्वा २प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वाहा वाचे सरस्वत्यै स्वाहा । दक्षाय स्वाहा क्रतवे स्वाहा । ओजसे स्वाहा बलाय स्वाहा ३देवस्त्वा सविता मध्वानक्तु ४ पृथिवीं तपसस्त्रायस्व ५ अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि ६ सँ सीदस्व महाँ असि । शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य । सृज प्रशस्तदर्शतम् ७ अञ्जन्ति यं प्रथयन्तो न विप्राः । वपावन्तं नाग्निना तपन्तः । पितुर्न पुत्र उपसि प्रेष्ठः । आ घर्मो अग्निमृतयन्नसादीत् ८ अनाधृष्या पुरस्तात् । अग्नेराधिपत्ये । आयुर्मे दाः । पुत्रवती दक्षिणतः । इन्द्रस्याधिपत्ये । प्रजां मे दाः । सुषदा पश्चात् । देवस्य सवितुराधिपत्ये । प्राणं मे दाः । आश्रुतिरुत्तरतः । मित्रावरुणयोराधिपत्ये । श्रोत्रं मे दाः । विधृतिरुपरिष्टात् । बृहस्पतेराधिपत्ये । ब्रह्म मे दाः क्षत्रं मे दाः । । तेजो मे धा। वर्चो मे धाः । यशो मे धास्तपो मे धाः । मनो मे धाः ९ मनोरश्वासि भूरिपुत्रा । विश्वाभ्यो मा नाष्ट्राभ्यः पाहि । सूपसदा मे भूया मा मा हिँसीः १० तपो ष्वग्ने अन्तराँ अमित्रान् । तपा शँसमररुषः परस्य । तपा वसो चिकितानो अचित्तान् । वि ते तिष्ठन्तामजरा अयासः ११ चितः स्थ परिचितः । स्वाहा मरुद्भिः परि श्रयस्व १२ मा असि । प्रमा असि । प्रतिमा असि । संमा असि । विमा असि । उन्मा असि । अन्तरिक्षस्यान्तर्धिरसि १३ दिवं तपसस्त्रायस्व १४आभिर्गीर्भिर्यदतो न ऊनम् । आप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महिगोत्रा रुजासि । भूयिष्ठभाजो अध ते स्याम १५ शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्तु १६ अर्हन्बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमब्भुवम् । न वा ओजीयो रुद्र त्वदस्ति १७ गायत्रमसि । त्रैष्टुभमसि । जागतमसि १८ मधु मधु मधु । अनक्त्वसादीदुत्तरतः पाहि प्रतिमा असि यजतं ते अन्यज् जागतमस्येकं च १९

## अनुवाक ६

दश प्राचीर्दश भासि दक्षिणा । दश प्रतीचीर्दश भास्युदीचीः । दशोर्ध्वा

भासि सुमनस्यमानः । स नो रुचं धेह्यहृणीयमानः १ अग्निष् ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा । स मा रुचितो रोचय २ इन्द्रस्त्वा रुद्रैर्दक्षि-णतो रोचयतु त्रैष्टुभेन छन्दसा । स मा रुचितो रोचय । वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । स मा रुचितो रोचय । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयनानुष्टुभेन छन्दसा । स मा रुचितो रोचय । बृहस्पति-स्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा । स मा रुचितो रोचय ३ रोचितस्त्वं देव घर्म देवेष्वसि । रोचिषीयाहं मनुष्येषु ४ सम्राड्घर्म रुचित-स्त्वं देवेष्वायुष्माँस्तेजस्वी ब्रह्मवर्चस्यसि । रुचितोऽहं मनुष्येष्वायु-ष्माँस्तेजस्वी ब्रह्मवर्चसी भूयासम् ५ रुगसि । रुचं मयि धेहि । मयि रुक् ६ दश पुरस्ताद्रोचसे । दश दक्षिणा । दश प्रत्यङ् । दशोदङ् । दशोर्ध्वो भासि सुमनस्यमानः । स नः सम्राडिषमूर्जं धेहि । वाजी वाजिने पवस्व । रोचितो घर्मो रुचीय ७ रोचय धेहि नव च

## अनुवाक ७

अपश्यं गोपामनिपद्यमानम् । आ च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसानः । आ वरीवर्ति भुवनेष्वन्तः १ अत्र प्रावीः । मधुमाध्वीभ्यां मधुमाधूचीभ्याम् । अनु वां देववीतये २ समग्निरग्निनागत । सं देवेन सवित्रा । सँ सूर्येण रोचते ३ स्वाहा समग्निस्तपसागत । सं देवेन सवित्रा । सं सूर्येणारोचिष्ट ४ धर्ता दिवो विभासि रजसः । पृथिव्या धर्ता । उरोरन्तरिक्षस्य धर्ता । धर्ता देवो देवानाम् । अमर्त्यस्तपोजाः ५ हृदे त्वा मनसे त्वा । दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं कृधि । दिवि देवेषु होत्रा यच्छ ६ विश्वासां भुवां पते । विश्वस्य भुवनस्पते । विश्वस्य मनसस्पते । विश्वस्य वचसस्पते । विश्वस्य तपसस्पते । विश्वस्य ब्रह्मणस्पते ७ देवश्रूस्त्वं देव घर्म देवान्पाहि ८ तपोजां वाचमस्मे नियच्छ देवायुवम् ९ गर्भो देवानाम् १० पिता मतीनाम् ११ पतिः प्रजानाम् १२ मतिः कवीनाम् १३ सं देवो देवेन सवित्रायतिष्ट । सँ सूर्येणारुक्त १४ आयुर्दस्त्वमस्मभ्यं घर्म वर्चोदा असि १५ पिता नोऽसि पिता नो बोध १६ आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवोदा द्रविणोदाः । अन्तरिक्षप्र उरोर्वरीयान् । अशीमहि त्वा मा मा हिँसीः १७ त्वमग्ने गृहपतिर्विशामसि । विश्वासां मानुषीणाम् । शतं पूर्भिर्यविष्ठ पाह्यँहसः । समेद्धारँ शतँ हिमाः । तन्द्राविणँ

हार्दिवानम् । इहैव रातयः सन्तु १८ त्वष्टीमती ते सपेय । सुरेता रेतो दधाना । वीरं विदेय तव संदृशि । माहँ रायस्पोषेण वि योषम् १९ रोचते सूर्याय त्वा देवायुवं द्रविणोदा दधाना द्वे च

## अनुवाक ८

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामाददे १ अदित्यै रास्नासि २ इड एहि । अदित एहि । सरस्वत्येहि ३ असावेहि । असावेहि । असावेहि ४ अदित्या उष्णीषमसि ५ वायुरस्यैडः ६ पूषा त्वोपावसृजतु । अश्विभां प्र दापय ७ यस्ते स्तनः शशयो यो मयोभूः । येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः । सरस्वति तमिह धातवे कः ८ उस्र घर्मँ शिँष । उस्र घर्मं पाहि । घर्माय शिँष ९ बृहस्पतिस्त्वोप सीदतु १० दानवः स्थ पेरवः । विष्वग्वृतो लोहितेन ११ अश्विभ्यां पिन्वस्व । सरस्वत्यै पिन्वस्व । पूष्णे पिन्वस्व । बृहस्पतये पिन्वस्व । इन्द्राय पिन्वस्व । इन्द्राय पिन्वस्व १२ गायत्रोऽसि । त्रैष्टुभोऽसि । जागतमसि १३ सहोर्जो भागेनोप मेहि १४ इन्द्राश्विना मधुनः सारघस्य । घर्मं पात वसवो यजता वट् १५ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि १६ मधु हविरसि १७ सूर्यस्य तपस्तप १८ द्यावापृथिवीभ्यां त्वा परि गृह्णामि १९ अन्तरिक्षेण त्वोप यच्छामि २० देवानां त्वा पितृणामनुमतो भर्तुँ शकेयम् २१ तेजोऽसि । तेजोऽनुप्रेहि । दिविस्पृङ्मा मा हिँसीः । अन्तरिक्षस्पृङ्मा मा हिँसीः । पृथिविस्पृङ्मा मा हिँसीः । सुवरसि सुवर्मे यच्छ । दिवं यच्छ दिवो मा पाहि २२ एहि पाहि पिन्वस्व गृह्णामि नव च

## अनुवाक ९

समुद्राय त्वा वाताय स्वाहा । सलिलाय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा । दुवस्वते त्वा वाताय स्वाहा । शिमिद्वते त्वा वाताय स्वाहा । अग्नये त्वा वसुमते स्वाहा । सोमाय त्वा रुद्रवते स्वाहा । वरुणाय त्वादित्यवते स्वाहा । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा । यमाय त्वाङ्गिरस्वते

पितृमते स्वाहा १ विश्वा आशा दक्षिणसत् २ विश्वान्देवानयाडिह ३ स्वाहाकृतस्य घर्मस्य । मधोः पिबतमश्विना । स्वाहाग्नये यज्ञियाय । शं यजुर्भिः ४ अश्विना घर्मं पातँ हार्दिवानम् । अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी मँसाताम् । स्वाहेन्द्राय ५ स्वाहेन्द्रा वट् ६ घर्ममपा-तमश्विना हार्दिवानम् । अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी अमँसाताम् । तं प्राव्यं यथावट् । नमो दिवे । नमः पृथिव्यै । दिवि धा इमं यज्ञम् । यज्ञमिमं दिवि धाः । दिवं गच्छ । अन्तरिक्षं गच्छ । पृथिवीं गच्छ । पञ्च प्रदिशो गच्छ । देवान्घर्मपान्गच्छ । पितॄ । न्घर्मपान्गच्छ । ७ आदित्यवते स्वाहा हार्दिवानं पृथिव्या अष्टौ च

## अनुवाक १०

इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि । क्षत्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि । यजमानाय पीपिहि । मह्यं ज्यैष्ठाय पीपिहि १ त्विष्यै त्वा । द्युम्नाय त्वा । इन्द्रियाय त्वा भूत्यै त्वा २ धर्मासि सुधर्मामेन्यस्मे । ब्रह्माणि धारय । क्षत्राणि धारय । विशं धारय । नेत्त्वा वातः स्कन्दयात् ३ अमुष्य त्वा प्राणे सादयामि । अमुना सह निरर्थं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ४ पूष्णे शरसे स्वाहा । ग्रावभ्यः स्वाहा । प्रतिरेभ्यः स्वाहा । द्यावापृथिवीभ्याँ स्वाहा । पितृभ्यो घर्मपेभ्यः स्वाहा ५ रुद्राय रुद्रहोत्रे स्वाहा ६ अहर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषाँ स्वाहा । रात्रिर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषाँ स्वाहा ७ अपीपरो माऽह्नो रात्रियै मा पाहि । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः । अपीपरो मा रात्रिया अह्नो मा पाहि । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः ८ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ९ भूः स्वाहा १० हुतँ हविः । मधु हविः । इन्द्रतमेऽग्नौ । पिता नोऽसि मा मा हिँसीः । अश्याम ते देव घर्म । मधुमतो वाजवतः पितुमतः । अङ्गिरस्वतः स्वधाविनः । अशीमहि त्वा मा मा हिँसीः ११ स्वाहा त्वा सूर्यस्य रश्मिभ्यः । स्वाहा त्वा नक्षत्रेभ्यः १२ ब्रह्मवर्चसाय पीपिहि स्कन्दयाद्रुद्राय रुद्रहोत्रे स्वाहाऽह्नो मा पाह्यग्नौ सप्त

च

## अनुवाक ११

घर्म या ते दिवि शुक् । या गायत्रे छन्दसि । या ब्राह्मणे । या हविर्धाने । तां त एतेनावयजे स्वाहा १ घर्म या तेऽन्तरिक्षे शुक् । या त्रैष्टुभे छन्दसि । या राजन्ये । याग्नीध्रे । तां त एतेनावयजे स्वाहा । घर्म या ते पृथिव्याँ शुक् । या जागते छन्दसि । या वैश्ये । या सदसि । तां त एतेनावयजे स्वाहा २ अनु नोऽद्यानुमतिः । अन्विदनुमते त्वम् ३ दिवस्त्वा परस्पायाः । अन्तरिक्षस्य तनुवः पाहि । पृथिव्यास्त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ४ ब्रह्मणस्त्वा परस्पायाः । क्षत्रस्य तनुवः पाहि । विशस्त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ५ प्राणस्य त्वा परस्पायै । चक्षुषस्तनुवः पाहि । श्रोत्रस्य त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ६ वल्गुरसि शंयुधायाः । शिषुर्जनधायाः ७ शं च वक्षि परि च वक्षि ८ चतुःस्रक्तिर्नाभिर्ऋतस्य ९ सदो विश्वायुः शर्म सप्रथाः १० अप द्वेषो अप ह्वरः । अन्यद्व्रतस्य सश्चिम ११ घर्मैतत्तेऽन्नमेतत्पुरीषम् । तेन वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयम् । आ च प्यासिषीमहि १२ रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्धानम् । अग्निरध्यक्षः । रुद्रोऽधिपतिः १३ समहमायुषा । सं प्राणेन । सं वर्चसा । सं पयसा । सं गौपत्येन । सँ रायस्पोषेण १४ व्यसौ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः १५ अचिक्रदद्वृषा हरिः । महान्मित्रो न दर्शतः । सँ सूर्येण रोचते १६ चिदसि समुद्रयोनिः । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो बुरण्युः । महान्त्सधस्थे ध्रुव आ निषत्तः । नमस्ते अस्तु मा मा हिँसीः १७ विश्वावसुँ सोमगन्धर्वम् । आपो ददृशुषीः । तदृतेना व्यायन् । तदन्ववैत् । इन्द्रो रारहाण आसाम् । परि सूर्यस्य परिधीँरपश्यत् १८ विश्वावसुरभि तन्नो गृणातु । दिव्यो गन्धर्वो रजसो विमानः । यद्वा घा सत्यमुत यन्न विद्म । धियो हिन्वानो धिय इन्नो अव्यात् १९ सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद्दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतानि वोचत् । इन्द्रो दक्षं परि जानादहीनम् २० एतत्त्वं देव घर्म देवो देवानुपागाः २१ इदमहं मनुष्यो मनुष्यान् । सोमपीथानु मेहि । सह प्रजया सह रायस्पोषेण २२ सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुः । योऽस्मान्द्वेष्टि । यं च

वयं द्विष्मः २३ उद्वयं तमसस्परि । उदु त्यं चित्रम् २४ इममू षु त्यमस्मभ्यँ सनिम् । गायत्रं नवीयाँसम् । अग्ने देवेषु प्र वोचः २५ याग्नीध्रे तां त एतेनावयजे स्वाहा धर्मणा शंयुधायाः प्यासिषीमहि पोषेण निषत्तो विद्म सन्त्वष्टौ च

अनुवाक १२

महीनां पयोऽसि विहितं देवत्रा १ ज्योतिर्भा असि वनस्पतीनामोषधीनाँ रसः २ वाजिनं त्वा वाजिनोऽव नयामः । ऊर्ध्वं मनः सुवर्गं ३

अनुवाक १३

अस्कान्द्यौः पृथिवीम् । अस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्र जनयतु १ अस्कानजनि प्राजनि । आ स्कन्नाज् जायते वृषा । स्कन्नात्प्र जनिषीमहि २

अनुवाक १४

या पुरस्ताद्विद्युदापतत् । तां त एतेनावयजे स्वाहा । या दक्षिणतः । या पश्चात् । योत्तरतः । योपरिष्टाद्विद्युदापतत् । तां त एतेनावयजे स्वाहा १

अनुवाक १५

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहाचक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वाहा वाचे सरस्वत्यै स्वाहा १

अनुवाक १६

पूष्णे स्वाहा पूष्णे शरसे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधियाय स्वाहा । पूष्णेऽङ्घृणये स्वाहा पूष्णे नरुणाय स्वाहा । पूष्णे साकेताय स्वाहा १

अनुवाक १७

उदस्य शुष्माद्भानुर्नार्त बिभर्ति । भारं पृथिवी न भूम । प्र शुक्रैतु देवी मनीषा । अस्मत्सुतष्टो रथो न वाजी । अर्चन्त एके महि साम मन्वत । तेन सूर्यमधारयन् । तेन सूर्यमरोचयन् । घर्मः शिरस्तदयमग्निः । पुरीषमसि

संप्रियं प्रजया पशुभिर्भुवत् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिर-
स्वद्ध्रुवा सीद १

अनुवाक १८

यास्त अग्न आर्द्रा योनयो याः कुलायिनीः । ये ते अग्न इन्दवो या उ नाभयः
। यास्ते अग्ने तनुव ऊर्जो नाम । ताभिस्त्वमुभयीभिः संविदानः । प्रजाभिरग्ने
द्रविणेह सीद । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद
१

अनुवाक १९

अग्निरसि वैश्वानरोऽसि । संवत्सरोऽसि परिवत्सरोऽसि ।
इदावत्सरोऽसीदुवत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि । तस्य ते वसन्तः
शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो
मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् । अहोरात्राणीष्टकाः ।
तस्य ते मासाश्चार्धमासाश्च कल्पन्ताम् । ऋतवस्ते कल्पन्ताम् । संवत्सरस्ते
कल्पन्ताम् । अहोरात्राणि ते कल्पन्ताम् । एति प्रेति वीति समित्युदिति ।
प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवः सीद १

अनुवाक २०

भूर्भुवः सुवः । ऊर्ध्व ऊ षु ण ऊतये । ऊर्ध्वो नः पाह्यँहसः १ विधुं दद्राणँ
समने बहूनाम् । युवानँ सन्तं पलितो जगार । देवस्य पश्य काव्यं महि-
त्वाऽद्या ममार । स ह्यः समान २ यदृते चिदभिश्रिषः । पुरा जर्तृभ्य
आतृदः । संधाता संधिं मघवा पुरोवसुः । निष्कर्ता विह्रुतं पुनः ३ पुनरूर्जा
सह रय्या ४ मा नो घर्म व्यथितो विव्यथो नः । मा नः परमधरं मा रजो
नैः । मो ष्वस्माँस्तमस्यन्तरा धाः । मा रुद्रियासो अभिगुर्वृधानः ५ मा
नः क्रतुभिर्हीडितेभिरस्मान् । द्विषा सुनीते मा परा दाः । मा नो रुद्रो नि-
र्ऋतिर्मा नो अस्ता । मा द्यावापृथिवी हीडिषाताम् ६ उप नो मित्रा-
वरुणाविहावतम् । अन्वादीध्याथामिह नः सखाया । आदित्यानां प्रसि-
तिर्हेतिः । उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु ७ इमं मे वरुण तत्त्वा
यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि ८ उद्वयं तमसस्परि उदु
त्यं चित्रम् वयः सुपर्णाः ९ पुरोवसुर्हीडिषाताँ सुपर्णाः

## अनुवाक २१

भूर्भुवः सुवः । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यम् । त्रिशुग्घर्मो वि भातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह । सत्येन तपसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि १

## अनुवाक २२

यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । यो स्मान्द्वेष्टि । यं च वयं द्विष्मः १

## अनुवाक २३

स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः १

## अनुवाक २४

धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयँश्च । निलिम्पश्च विलिम्पश्च विक्षिपः १

## अनुवाक २५

उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयँश्च । सहसह्वाँश्च सहमानश्च सहस्वाँश्च सहीयाँश्च । एत्य प्रेत्य विक्षिपः १

## अनुवाक २६

अहोरात्रे त्वोदीरयताम् । अर्धमासास्त्वोदीँ जयन्तु । मासास्त्वा श्रपयन्तु । ऋतवस्त्वा पचन्तु । संवत्सरस्त्वा हन्त्वसौ १

## अनुवाक २७

खट्फट्जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचः क्रूराणि १

## अनुवाक २८

वि गा इन्द्र विचरन्त्स्पाशयस्व । स्वपन्त इन्द्र पशुमन्तमिच्छा । वज्रेणामुं बोधय दुर्विदत्रम् । स्वपतोऽस्य प्रहर भोजनेभ्यः १अग्ने अग्निना सं वदस्व । मृत्यो मृत्युना सं वदस्व । नमस्ते अस्तु भगवः २सकृत्ते अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः । पञ्चकृत्वस्ते नमःदशकृत्वस्ते नम । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते नमः । अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिँसीः ३

## अनुवाक २९

असृङ्मुखो रुधिरेणाव्यक्त । यमस्य दूतः श्वपाद्वि धावसि । गृध्रः सुपर्णः कुणपं नि षेवसे । यमस्य दूतः प्रहितो भवस्य चोभयोः १

## अनुवाक ३०

यदेतद्वृकसो भूत्वा । वाग्देव्यभिरायसि । द्विषन्तं मेऽभिराय । तं मृत्यो मृत्यवे नय । स आर्त्यार्तिमार्च्छतु १

## अनुवाक ३१

यदीषितो यदि वा स्वकामी । भयेडको वदति वाचमेताम् । तामिन्द्राग्नी ब्रह्मणा संविदानौ । शिवामस्मभ्यं कृणुतं गृहेषु १

## अनुवाक ३२

दीर्घमुखि दुर्हणु । मा स्म दक्षिणतो वदः । यदि दक्षिणतो वदाद्द्विषन्तं मेऽवबाधासै १

## अनुवाक ३३

इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः । तमितो नाशयाग्ने १

## अनुवाक ३४

यदेतद्भूतान्यन्वाविश्य । दैवीं वाचं वदसि । द्विषतो नः परावद । तान्मृत्यो मृत्यवे नय । त आर्त्यार्तिमार्च्छन्तु । अग्निनाग्निः सं वदताम् १

अनुवाक ३५

प्रसार्य सक्थ्यौ पतसि । सव्यमक्षि निपेपि च । मेह कस्य चनाममत् १

अनुवाक ३६

अत्रिणा त्वा क्रिमे हन्मि । कगवेन जमदग्निना । विश्वावसोर्ब्रह्मणा हतः । क्रिमीणाँ राजा । अप्येषाँ स्थपतिर्हतः । अथो माताथो पिता । अथो स्थूरा अथो क्षुद्राः । अथो कृष्णा अथो श्वेताः । अथो आशातिका हताः । श्वेताभिः सह सर्वे हताः १

अनुवाक ३७

आहरावद्य । शृतस्य हविषो यथा । तत्सत्यम् । यदमुं यमस्य जम्भयोः । आदधामि तथा हि तत् । खगफगम्रसि १

अनुवाक ३८

ब्रह्मणा त्वा शपामि । ब्रह्मणस्त्वा शपथेन शपामि । घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे । रौद्रेण त्वाङ्गिरसां मनसा ध्यायामि । अघस्य त्वा धारया विध्यामि । अधरो मत्पद्यस्वासौ १

अनुवाक ३९

उत्तुद शिमिजावरि । तल्पेजे तल्प उत्तुद । गिरीँरनु प्र वेशय । मरीचीरुप सं नुद । यावदितः पुरस्तादुदयाति सूर्यः । तावदितोऽमुं नाशय । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः १

अनुवाक ४०

भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवः । भुवोऽद्धायि भुवोऽद्धायि भुवोऽद्धायि । नृम्णायि नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णम् । निधाय्योऽवायि निधाय्योऽवायि निधाय्योऽवायि । ए अस्मे अस्मे । सुवर्न ज्योतीः १

अनुवाक ४१

पृथिवी समित् । तामग्निः समिन्धे । साऽग्निँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन

। अन्नाद्येन समिन्ताँ स्वाहा १ अन्तरिक्षँ समित् । तां वायुः समिन्धे । सा वायुँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताँ स्वाहा २ द्यौः समित् । तामादित्यः समिन्धे । सादित्यँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताँ स्वाहा ३ प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा ४ अग्ने व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत आदित्य व्रतपते । व्रतानां व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् ५ द्यौः समित् । तामादित्यः समिन्धे । सादित्यँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रियायशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताँ स्वाहा । अन्तरिक्षँ समित् । तां वायुः समिन्धेसा वायुँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताँ स्वाहा । पृथिवी समित् । तामग्निः समिन्धे । साऽग्निँ समिन्धे । तामहँ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताँ स्वाहा । प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा । आदित्य व्रतपते व्रतमचारिषम् । तदशकं तन्मेऽराधि । वायो व्रतपतेऽग्ने व्रतपते । व्रतानां व्रतपते व्रतमचारिषम् । तदशकं तन्मेऽराधि ६ समित्समिन्धे व्रतं चरिष्यामि तेजसा श्रिया यशसा ब्रह्मवर्चसेनाष्टौ च

## अनुवाक ४२

शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः । अहानि शं भवन्तु नः शं रात्रिः प्रति धीयताम् १ शमुषा नो व्यच्छतु । शमादित्य उदेतु नः । शिवा नः शंतमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि २ इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्म ह्यवास्तुः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ३ प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्म ह्यप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ४ आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वँ हि विश्वभेषजो देवानां दूत ईयसे ५ द्वाविमौ वातौ वात आ सिन्धोरा परावतः । दक्षं मे अन्य आवातु पराऽन्यो वातु यद्रपः ६

यददो वात ते गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आ वह ७ वात आ वातु भेषजँ शंभूर्मयोभूर्नो हृदे । प्र ण आयूँषि तारिषत् ८ इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन ९ भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये १० अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्ति मां तया स्वस्त्या स्वस्ति मानसानि ११ प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम् १२ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु १३ द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः १४ कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता १५ कस्त्वा सत्यो मदानां मँहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु १६ अभी षु णः सखीनाम-विता जरितॄणाम् । शतं भवास्यूतिभिः १७ वयः सुपर्णा उपसेदुरिन्द्रं प्रि-यमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् १८ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः १९ ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् २० सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्यो स्मान्द्वेष्टि यं च वयं द्विष्मः २१ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे २२ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः २३ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः २४ पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचँ शमयतु २५ अन्तरिक्षँ शान्तं तद्वायुना शान्तं तन्मे शान्तँ शुचँ शमयतु २६ द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचँ शमयतु २७ पृथिवी शान्तिरन्तरिक्षँ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः २८ तयाहँ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिङ् करोमि शान्तिर्मे अस्तु शान्तिः २९ एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यां धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा

माँ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ३० उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताँ अनु ३१ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्र ब्रवाम शरदः शतं अजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ३२ य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ३३ ब्रह्मणः श्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीँ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधि वि स्रसत् ३४ मेधामनीषे माविशताँसमीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि ३५ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ३६ ब्रह्म प्रावादिष्म तन्नो मा हासीत् । ओं शान्तिः शान्तिः शान्तिः ३७ परावतो दधातु बद्धाञ् जिन्वथ दृशे सप्त च

## प्रपाठक ५

### प्रवर्ग्यब्राह्मण

हरिः ओं । शं नः तन्नो मा हासीत् । ओं शान्तिः शान्तिः शान्तिः ।

### अनुवाक १

देवा वै सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहासदिति । तेषां कुरुक्षेत्रं वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्ध आसीत् । तूर्घ्नमुत्तरार्धः । परीणज् जघनार्धः । मरव उत्करः १ तेषां मखं वैष्णवं याश आर्च्छत् । तन्नयकामयत । तेनापाक्रामत् । तं देवा अन्वायन् । यशो वरुरुत्समानाः । तस्यान्वागतस्य । सव्याद्धनुरजायत । दक्षिणादिषवः । तस्मादिषुधन्वं पुण्यजन्म । यज्ञजन्मा हि २ तमेकँ सन्तम् । बहवो नाभ्यधृष्णुवन् । तस्मादेक-मिषुधनविनम् । बहवोऽनिषुधन्वा नाभि धृष्णुवन्ति । सोऽस्मयत । एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति । तस्य सिष्मियाणस्य तेजोऽपाक्रामत् । तद्देवा ओषधीषु न्यमृजुः । ते श्यामाका अभवन् । स्मयाका वै नामैते ३ तत्स्मयाकानाँ स्मयाकत्वम् । तस्माद्दीक्षितेनापिगृह्य स्मेतव्यम् । तेजसो धृत्यै । स धनुः प्रतिष्कभ्यातिष्ठत् । ता उपदीका अब्रुवन्वरं वृणामहै । अथ व इमँ रन्धयाम । यत्र क्व च खनाम । तदपोऽभि तृणदामेति । तस्मादुपदीका यत्र क्व च खनन्ति । तदपोऽभि तृन्दन्ति ४ वारेवृतँ ह्यासाम् । तस्य ज्यामप्यादन् । तस्य धनुर्विप्रवमाणँ शिर उदवर्तयत् । तद्द्या-वापृथिवी अनु प्रावर्तत यत्प्रावर्तत । तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम् । यद्धाँ३ इत्यपतत् । तद्धर्मस्य घर्मत्वम् । महतो वीर्यमपप्तदिति । तन्महावीरस्य महावीरत्वम् ५ यदस्याः समभरन् । तत्सम्राज्ञः सम्राट्त्वम् । तँ स्तृतं देवतास्त्रेधा व्यगृह्णत । अग्निः प्रातःसवनम् । इन्द्रो माध्यंदिनँ सवनम् । विश्वे देवास्तृतीयसवनम् । तेनापशिर्ष्णा यज्ञेन यजमानाः । नाशिषो-ऽवारुन्धत । न सुवर्गं लोकमभ्यजयन् । ते देवा अश्विनावब्रुवन् ६ भिषजौ वै स्थः । इदं यज्ञस्य शिरः प्रति धत्तमिति । तावब्रूतां वरं वृणावहै । ग्रह एव नावत्रापि गृह्यतामिति । ताभ्यामेतमाश्विनमगृह्णन् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । यत्प्रवर्ग्यः । तेन सशीर्ष्णा यज्ञेन यजमानाः । अवाशि-

षोऽरुन्धत । अभि सुवर्गं लोकमजयन् । यत्प्रवर्ग्यं प्रवृणक्ति । यज्ञस्यैव तच्छिरः प्रति दधाति । तेन सशीर्ष्णा यज्ञेन यजमानः । अवाशिषो रुन्धे । अभि सुवर्गं लोकां जयति । तस्मादेष आश्विनप्रवया इव । यत्प्रवर्ग्यः ७ उत्करो ह्येते तृन्दन्ति महावीरत्वमब्रुवन्नजयन्त्सप्त च

## अनुवाक २

सावित्रं जुहोति प्रसूत्यै । चतुर्गृहीतेन जुहोति । चतुष्पादः पशवः । पशूनेवाव रुन्धे । चतस्रो दिशः । दिक्ष्वेव प्रति तिष्ठति । छन्दाँसि देवेभ्योऽपाक्रामन् । न वो भागानि हव्यं वक्ष्याम इति । तेभ्य एतच्चतुर्गृहीतमधारयन् । पुरोनुवाक्यायै याज्यायै १ देवतायै वषट्काराय । यच्चतुर्गृहीतं जुहोति । छन्दाँस्येव तत्प्रीणाति । तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति । ब्रह्मवादिनो वदन्ति । होतव्यं दीक्षितस्य गृहा३ इ न होतव्या३मिति । हविर्वै दीक्षितः । यज् जुहुयात् । हविष्कृतं यजमानमग्नौ प्र दध्यात् । यन्न जुहुयात् २ यज्ञपरुरन्तरियात् । यजुरेव वदेत् । न हविष्कृतं यजमानमग्नौ प्रदधाति । न यज्ञपरुरन्तरेति । गायत्री छन्दाँस्यत्यमन्यत । तस्यै वषट्कारोऽभ्यय्य शिरोऽच्छिनत् । तस्यै द्वेधा रसः परापतत् । पृथिवीमर्धः प्राविशत् । पशूनर्धः । यः पृथिवीं प्रावि । सत् ३ स खदिरोऽभवत् । यः पशून् । सोऽजाम् । यत्खादिर्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य शिरः सं भरति । यदौदुम्बरी । ऊर्ग्वा उदुम्बरः । ऊर्जैव यज्ञस्य शिरः सं भरति । यद्वैणवी । तेजो वै वेणुः ४ तेजसैव यज्ञस्य शिरः सं भरति । यद्वैकङ्कती । भा एवाव रुन्धे । देवस्य त्वा सवितुः प्रसव् । अ इत्यभ्रिमा दत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । वज्र इव वा एषा । यदभ्रिः । अभ्रिरसि नारिरसीत्याह शान्त्यै ५ अध्वरकृद्देवेभ्य इत्याह । यज्ञो वा अध्वरः । यज्ञकृद्देवेभ्य इति वावैतदाह । उत्तिष्ठ ब्रह्मणस्पत इत्याह । ब्रह्मणैव यज्ञस्य शिरोऽच्छैति । प्रैतु ब्रह्मणस्पतिरित्याह । प्रेत्यैव यज्ञस्य शिरोऽच्छैति । प्र देव्येतु सूनृतेत्याह । यज्ञो वै सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसमित्याह ६ पाङ्क्तो हि यज्ञः । देवा यज्ञं नयन्तु न इत्याह । देवानेव यज्ञनियः कुरुते । देवी द्यावापृथिवी अनु मे मँसाथामित्याह आभ्यामेवानुमतो यज्ञस्य शिरः सं भरति । ऋध्यासमद्य मखस्य शिर इत्याह । यज्ञो वै मखः । ऋध्यासमद्य

यज्ञस्य शिर इति वावैतदाह । मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह । निर्दिश्यैवैनद्धरति ७ त्रिर्हरति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो यज्ञस्य शिरः सं भरति । तूष्णीं चतुर्थँ हरति । अपरिमितादेव यज्ञस्य शिरः सं भरति । मृत्खनादग्रे हरति । तस्मान्मृत्खनः करुणयतमः । इयत्यग्र आसीरित्याह । अस्यामेवाच्छंबट्कारं यज्ञस्य शिरः सं भरति । ऊर्जं वा एतँ रसं पृथिव्या उपदीका उद्दिहन्ति ८ यद्वल्मीकम् । यद्वल्मीकवपा संभारो भवति । ऊर्जमेव रसं पृथिव्या अव रुन्धे । अथो श्रोत्रमेव । श्रोत्रँ ह्येतत्पृथिव्याः । यद्वल्मीक । अबधिरो भवति । य एवं वेद । इन्द्रो वृत्राय वज्रमुदयच्छत् । स यत्रयत्र पराक्रमत ९ तन्नाध्रियत । स पूतीकस्तम्बे पराक्रमत । सोऽध्रियत । सोऽब्रवीत् । ऊतिं वै मेऽधा इति । तदूतीकानामूतीकत्वम् । यदूतीका भवन्ति । यज्ञायैवोतिं दधति । अग्निजा असि प्रजापते रेत इत्याह । य एव रसः पशून्प्राविशत् १० तमेवाव रुन्धे । पञ्चैते संभारा भवन्ति । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः सं भरति । यद्ग्राम्याणां पशूनां चर्मणा संभरेत् । ग्राम्यान्पशूञ् छुचार्पयेत् । कृष्णाजिनेन सं भरति । आरण्यानेव पशूञ् छुचार्पयति । तस्मात्समा-वत्पशूनां प्रजायमानानाम् ११ आरण्याः पशवः कनीयाँसः । शुचा ह्युताःलोमतः सं भरति । अतो ह्यस्य मेध्यम् । परिगृह्या यन्ति । रक्षसाम-पहत्यै । बहवो हरन्ति । अपचितिमेवास्मिन्दधति । उद्धते सिकतोपोप्ते परिश्रिते नि दधति शान्त्यै । मदन्तीभिरुप सृजति १२ तेज एवास्मिन्दधाति । मधु त्वा मधुला करोत्वित्याह । ब्रह्मणैवास्मिन्तेजो दधाति । यद्ग्राम्याणां पात्राणां कपालैः सँसृजेत् । ग्राम्याणि पात्राणि शुचार्पयेत् । अर्मकपालैः सँ सृजति । एतानि वा अनुपजीवनीयानि । तान्येव शुचार्पयति । शर्कराभिः सँ सृजति धृत्यै । अथो शंत्वाय । अजलोमैः सँ सृजति । एषा वा अग्नेः प्रिया तनूः । यदजा । प्रिययैवैनं तनुवा सँ सृजति । अथोतेजसा । कृष्णाजिनस्य लोमभिः सँ सृजति । यज्ञो वै कृष्णाजिनम् । यज्ञेनैव यज्ञँ सँ सृजति १३ याज्यायै न जुहुयादविश्द्वेणुः शान्त्यै पङ्क्तिराधसमित्याह हरति दिहन्ति पराक्रमताविशत्प्रजायमानानाँ सृजति शंत्वायाष्टौ च

अनुवाक ३

परिश्रिते करोति । ब्रह्मवर्चसस्य परिगृहीत्यै । न कुर्वन्नभि प्राण्यात् ।

यत्कुर्वन्नभिप्राणयात् । प्राणाञ् छुचार्पयेत्अपहाय प्राणिति । प्राणानां गोपीथाय । न प्रवर्ग्यं चादित्यं चान्तरेयात् । यदन्तरेयात् । दुश्चर्मा स्यात् १ तस्मान्नान्तराय्यम् । आत्मनो गोपीथाय । वेणुना करोति । तेजो वै वेणुः । तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति । मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्प्रवर्ग्यः २ तस्मादेवमाह । यज्ञस्य पदे स्थ इत्याह । यज्ञस्य ह्येते पदे । अथो प्रतिष्ठित्यै । गायत्रेण त्वा छन्दसा करोमीत्याह । छन्दोभिरेवैनं करोति । त्र्युद्धिं करोति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । छन्दोभिः करोति ३ वीर्यं वै छन्दाँसि । वीर्येणैवैनं करोति । यजुषा बिलं करोति व्यावृत्त्यै । इयन्तं करोति । प्रजापतिना यज्ञमुखेन संमितम् । इयन्तं करोति । यज्ञपरुषा संमितम् । इयन्तं करोति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमितम् ४ अपरिमितं करोति । अपरिमितस्यावरुद्ध्यै । परिग्रीवं करोति धृत्यै । सूर्यस्य हरसा श्रायेत्याह । यथायजुरेवैतत् । अश्वशकेन धूपयति । प्राजापत्यो वा अश्वः सयोनित्वाय । वृष्णो अश्वस्य निष्पदसीत्याह । असौ वा आदित्यो वृशाश्वः । तस्य छन्दाँसि निष्पत् ५ छन्दोभिरेवैनं धूपयति । अर्चिषे त्वा शोचिषे त्वेत्याह । तेज एवास्मिन्दधाति । वारुणो भीद्धः । मैत्रियोपैति शान्त्यै । सिद्ध्यै त्वेत्याह । यथायजुरेवैतत् । देवस्त्वा सवितोद्वपत्वित्याह । सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरुद्वपति । अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह ६ तस्मादग्निः सर्वा दिशोऽनु वि भाति । उत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै । ईश्वरो वा एशोऽन्धो भवितोः । यः प्रवर्ग्यमन्वीक्षते । सूर्यस्य त्वा चक्षुषान्वीक्ष इत्याह । चक्षुषो गोपीथाय । ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह । इयं वा ऋजुः । अन्तरिक्षँ साधु । असौ सुक्षितिः ७ दिशो भूतिः । इमानेवास्मै लोकान्कल्पयति । अथो प्रतिष्ठित्यै । इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याह । विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति । विशेति राजन्यस्य ब्रूयात् । विशैवैनं पर्यूहति । पशुभिरिति वैश्यस्य । पशुभिरेवैनं पर्यूहति । असुर्यं पात्रमनाच्छृणणम् ८ आ च्छृणत्ति । देवत्राकः । अजक्षीरेणा च्छृणत्ति । परमं वा एतत्पयः । यदजक्षीरम् । परमेणैवैनं पयसा च्छृणत्ति । यजुषा व्यावृत्त्यै । छन्दोघिरा च्छृणत्ति । छन्दोभिर्वा एष क्रियते । छन्दोभिरेव छन्दाँस्या च्छृणत्ति । छृन्धि वाचमित्याह ।

वाचमेवाव रुन्धे । छृन्ध्यूर्जमित्याह । ऊर्जमेवाव रुन्धे । छृन्धि हविरित्याह । हविरेवाकः । देव पुरश्चर सघ्यासं त्वेत्याह । यथायजुरेवैतत् ६ स्याद्यत्प्रवर्ग्यश्छन्दोभिः करोति वीर्यसमितं छन्दाँसि निष्पत्पृणेत्याह सुक्षितिरनाच्छृरणं छन्दाँस्याच्छृणत्त्यष्टौ च

## अनुवाक ४

ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभि ष्टुहीत्याह । एष वा एतर्हि बृहस्पतिः । यद्ब्रह्मा । तस्मा एव प्रतिप्रोच्य प्रचरति । आत्मनोऽनार्त्यै । यमाय त्वा मखाय त्वेत्याह । एता वा एतस्य देवताः । ताभिरेवैनँ समर्धयति । मदन्तीभिः प्रोक्षति । तेज एवास्मिन्दधाति १अभिपूर्वं प्रोक्षति । अभिपूर्वमेवास्मिन्तेजो दधाति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय । होतान्वाह । रक्षसामपहत्यै । अनवानम् । प्राणानाँ सन्तत्यै । त्रिष्टुभः सतीर्गायत्रीरिवान्वाह २ गायत्रो हि प्राणः । प्राणमेव यजमाने दधाति । सन्ततमन्वाह । प्राणानामन्नाद्यस्य सन्तत्यै । अथो रक्षसामपहत्यै । यत्परिमिता अनुब्रूयात् । परिमितमव रुन्धीत । अपरिमिता अन्वाह । अपरिमितस्यावरुद्ध्यै । शिरो वा एतद्यज्ञस्य ३ यत्प्रवर्ग्यः । ऊर्ङ्मुञ्जाः । यन्मौञ्जो वेदो भवति । ऊर्जैव यज्ञस्य शिरः समर्धयति । प्राणाहुतीर्जुहोति । प्राणानेव यजमाने दधाति । सप्त जुहोति । सप्त वै शीर्षण्याः प्राणाः । प्राणानेवास्मिन्दधाति । देवस्त्वा सविता मध्वानक्त्वित्याह ४ तेजसैवैनमनक्ति । पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति । अस्या अनतिदाहाय । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । अग्निः सर्वा देवताः । प्रलवानादीप्योपास्यति । देवतास्वेव यज्ञस्य शिरः प्रति दधाति । अप्रतिशीर्णाग्रं भवति । एतद्बर्हिर्ह्येषः ५ अर्चिरसि शोचिरसीत्याह । तेज एवास्मिन्ब्रह्मवर्चसं दधाति । सँ सीदस्व महाँ असीत्याह । महान्ह्येषः । ब्रह्मवादिनो वदन्ति । एते वाव त ऋत्विजः । ये दर्शपूर्णमासयोः । अथ कथा होता यजमानायाशिषो ना शास्त इति । पुरस्तादाशीः खलु वा अन्यो यज्ञः । उपरिष्टादाशीरन्यः ६ अनाधृष्या पुरस्तादिति यदेतानि यजूँष्याह । शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे । आयुः पुरस्तादाह । प्रजां दक्षिणतः । प्राणं पश्चात् । श्रोत्रमुत्तरतः । विधृतिमुपरिष्टात् । प्राणानेवास्मै समीचो दधाति । ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनु व्यास्था-

पयन्ति ७ मनोरश्वासि भूरिपुत्रेतीमामभि मृशति । इयं वै मनोरश्वा भूरिपुत्रा । अस्यामेव प्रति तिष्ठत्यनुन्मादाय । सूपसदा मे भूया मा मा हिँसी-रित्याहाहिँसायै । चितः स्थ परिचित इत्याह । अपचितिमेवास्मिन्दधाति । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः । तस्य मरुतो रश्मयः ८ स्वाहा मरुद्भिः परि श्रयस्वेत्याह । अमुमेवादित्यँ रश्मिभिः पर्यूहति । तस्मादसावादित्योऽमुष्मिल्ँलोके रश्मिभिः पर्यूढः । तस्माद्राजा विशा पर्यूढः । तस्माद्ग्रामणीः सजातैः पर्यूढः । अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्छत् । यद्वैकङ्कताः परिधयो भवन्ति । भा एवाव रुन्धे । द्वादश भवन्ति ९ द्वादश मासाः संवत्सरः । संवत्सरमेवाव रुन्धे । अस्ति त्रयोदशो मास इत्याहुः । यत्त्रयोदशः परिधिर्भवति । तेनैव त्रयो-दशं मासमव रुन्धे । अन्तरिक्षस्यान्तर्धिरसीत्याह व्यावृत्त्यै । दिवं तप-सस्त्रायस्वेत्युपरिष्टाद्धिरण्यमाधि नि दधाति । अमुष्या अनतिदाहाय । अथो आभ्यामेवैनमुभयतः परि गृह्णाति । अर्हन्बिभर्षि सायकानि धन्वेत्याह १० स्तौत्येवैनमेतत् । गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्या दत्ते । छन्दोभिरेवैनान्या दत्ते । मधु मध्विति धूनोति । प्राणो वै मधु । प्राणमेव यजमाने दधाति । त्रिः परि यन्ति । त्रिवृद्धि प्राणः । त्रिः परि यन्ति । त्र्यावृद्धि यज्ञः ११ अथो रक्षसामपहत्यै । त्रिः पुनः परि यन्ति । षट्सं पद्यन्ते । षड्वा ऋतवः । ऋतुष्वेव प्रति तिष्ठन्ति । यो वै घर्मस्य प्रियां तनुवमाक्रामति । दुश्चर्मा वै स भवति । एष ह वा अस्य प्रियां तनुवमा क्रामति । यस्त्रिः परीत्य चतुर्थं पर्येति । एताँ ह वा अस्योग्रदेवो राजनिरा चक्राम १२ ततो वै स दुश्चर्माभवत् । तस्मात्त्रिः परीत्य न चतुर्थं परीयात् । आत्मनो गोपीथाय । प्राणा वै धवित्राणि । अव्यतिषङ्गं धून्वन्ति । प्राणानामव्यतिषङ्गाय क्ळ्प्त्यै । विनिषद्य धून्वन्ति । दिक्ष्वेव प्रति तिष्ठन्ति । ऊर्ध्वं धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै । सर्वतो धून्वन्ति । तस्मादयं सर्वतः पवते १३ दधातीवान्वाह यज्ञस्याहैष उपरिष्टादा । षीरन्यो व्यास्थापयन्ति रश्मयो भवन्ति धन्वेत्याह यज्ञश्चक्राम समष्ट्यै द्वे च

## अनुवाक ५

अग्निष् ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह । अग्निरेवैनं वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमे-

वैतामा शास्ते । इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसेत्याह । इन्द्र एवैनँ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामा शास्ते । वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुणएवैनं आदित्यैः पश्चाद्रोचयति जागतेन छन्दसा १ स मा रुचितो रोचयेत्याह । आशिषमेवैतामा शास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो मरुद्भिरुत्तरतो रोचय- त्यानुष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामा शास्ते । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसेत्याह । बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामा शास्ते । रोचितस्त्वं देव घर्म देवेष्वसीत्याह । रोचितो ह्येष देवेषु । रोचिषीयाहं मनुष्येष्वित्याह । रोचत एवैष मनुष्येषु । सम्राड्घर्म रुचितस्त्वं देवेष्वायुष्माँस्तेजस्वी ब्रह्मवर्चस्यसीत्याह २

## अनुवाक ५

रुचितो ह्येष देवेष्वायुष्माँस्तेजस्वी ब्रह्मवर्चसी । रुचितोऽहं मनुष्येष्वायुष्माँस्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह । रुचित एवैष मनुष्येष्वायुष्माँस्तेजस्वी ब्रह्मवर्चसी भवति । रुगसि रुचं मयि धेहि मयि रुगित्याह । आशिषमेवैतामा शास्ते । तं यदेतैर्यजुर्भिररोचयित्वा । रुचितो घर्म इति प्रब्रूयात् । अरोचुकोऽध्वरुः स्यात् । अरोचुको यजमानः । अथ यदेनमेतैर्यजुर्भी रोचयित्वा । रुचितो घर्म इति प्राह । रोचुकोऽध्वर्युर्भवति । रोचुको यजमानः १ पश्चाद्रोचयति जागतेन छन्दसा स मा रुचितो रोचये- त्याहाशिषमेवैतामा शास्तेऽष्टौ च

## अनुवाक ६

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । ग्रीवा उपसदः । पुरस्तादुपसदां प्रवर्ग्यं प्र वृणक्ति । ग्रीवास्वेव यज्ञस्य शिरः प्रति दधाति । त्रिः प्र वृणक्ति । त्रय इमे लोकाः । एभ्य एव लोकेभो यज्ञस्य शिरोऽव रुन्धे । षट्सं पद्यन्ते । षड्वा ऋतवः १ ऋतुभ्य एव यज्ञस्य शिरोऽव रुन्धे । द्वादश कृत्वः प्र वृणक्ति । द्वादश मासाः संवत्सरः । संवत्सरादेव यज्ञस्य शिरोऽव रुन्धे । चतुर्विँशतिः सं पद्यन्ते । चतुर्विँशतिरर्धमासाः । अर्धमासेभ्य एव

यज्ञस्य शिरोऽव रुन्धे । अथो खलु । सकृदेव प्रवृज्यः । एकँ हि शिरः २ अग्निष्टोमे प्र वृणक्ति । एतावान्वै यज्ञः । यावानग्निष्टोमः । यावानेव यज्ञः । तस्य शिरः प्रति दधाति । नोक्थ्ये प्र वृञ्ज्यात् । प्रजा वै पशव उक्थानि । यदुक्थ्ये प्रवृञ्ज्यात् । प्रजां पशूनस्य निर्दहेत् । विश्वजिति सर्वपृष्ठे प्र वृणक्ति ३ पृष्ठानि वा अच्युतं च्यावयन्ति । पृष्ठैरेवास्मा अच्युतं च्यावयित्वाव रुन्धे । अपश्यं गोपामित्याह । प्राणो वै गोपाः । प्राणमेव प्रजासु वि यातयति । अपश्यं गोपामित्याह । असौ वा आदित्यो गोपाः । स हीमाः प्रजा गोपायति । तमेव प्रजानां गोप्तारं कुरुते । अनिपद्यमानमित्याह ४ न ह्येष निपद्यते । आ च परा च पथिभिश्चरन्तमित्याह । आ च ह्येश परा च पथिभिश्चरति । स सध्रीचीः स विषूचीर्वसान इत्याह । सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभि विपश्यति । आ वरीवर्ति भुवनेष्वन्तरित्याह । आ ह्येष वरीवर्ति भुवनेष्वन्तः । अत्र प्रावीर्मधु माध्वीभ्यां मधु माधूचीभ्यामित्याह । वासन्तिकावेवास्मा ऋतू कल्पयति । समग्निरग्निनागतेत्याह ५ ग्रैष्मावेवास्मा ऋतू कल्पयति । समग्निरग्नि-नागतेत्याह । अग्निर्ह्येवैषोऽग्निना संगच्छते स्वाहा समग्निस्तपसागतेत्याह । पूर्वमेवोदितम् । उत्तरेणाभि गृणाति । धर्ता दिवो वि भासि रजसः पृथिव्या इत्याह । वार्षिकावेवास्मा ऋतू कल्पयति । हृदे त्वा मनसे त्वेत्याह । शारदावेवास्मा ऋतू कल्पयति ६ दिवि देवेषु होत्रा यच्छेत्याह । होत्रा-भिरेवेमाल्ँलोकान्त्सं दधाति । विश्वासां भुवां पत इत्याह । हैमन्तिका-वेवास्मा ऋतू कल्पयति । देवश्रूस्त्वं देव घर्म देवान्पाहीत्याह । शैशिरावेवास्मा ऋतू कल्पयति । तपोजां वाचमस्मे नि यच्छ देवायुव-मित्याह । या वै मेध्या वाक् । सा तपोजाः । तामेवाव रुन्धे ७ गर्भो देवानामित्याह । गर्भो ह्येष देवानाम् । पिता मतीनामित्याह । प्रजा वै मतयः । तासामेष एव पिता । यत्प्रवर्ग्यः । तस्मादेवमाह । पतिः प्रजानामित्याह । पतिर्ह्येष प्रजानाम् । मतिः कवीनामित्याह ८ मतिर्ह्येष कवीनाम् । सं देवो देवेन सवित्रायतिष्ट सं सूर्येणारुक्तेत्याह । अमुं चैवादित्यं प्रवर्ग्यं च सं शास्ति । आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असीत्याह । आशिषमेवैतामा शास्ते । पिता नोऽसि पिता नो बोधेत्याह । बोधयत्येवैनम् । नवैतेऽवकाशा भवन्ति । पत्नियै दशमः । नव वै पुरुषे प्राणाः ९ नाभिर्दशमी । प्राणानेव यजमाने दधाति । अथो दशाक्षरा विराट् । अन्नं

विराट् । विराजैवान्नाद्यमव रुन्धे । यज्ञस्य शिरोऽच्छिद्यत । तद्देवा होत्राभिः प्रत्यदधुः । ऋत्विजोऽवेक्षन्ते । एता वै होत्राः । होत्राभिरेव यज्ञस्य शिरः प्रति दधाति १० रुचितमवेक्षन्ते । रुचिताद्वै प्रजापतिः प्रजा असृजत । प्रजानाँ सृष्ट्यै । रुचितमवेक्षन्ते । रुचिताद्वै पर्जन्यो वर्षति । वर्षुकः पर्जन्यो भवति । सं प्रजा एधन्ते । रुचितमवेक्षन्ते । रुचितं वै ब्रह्मवर्चसम् । ब्रह्मवर्चसिनो भवन्ति ११ अधीयन्तोऽवेक्षन्ते । सर्वमायुर्यन्ति । न पत्न्यवेक्षेत । यत्पत्न्यवेक्षेत । प्र जायेत । प्रजां त्वस्यै निर्दहेत् । यन्नावेक्षेत । न प्र जायेत । नास्यै प्रजां निर्दहेत् । तिरस्कृत्य यजुर्वाचयति १२ प्र जायते । नास्यै प्रजां निर्दहति । त्वष्टीमती ते सपेयेत्याह । सपाद्धि प्रजाः प्रजायन्ते १३ ऋतवो हि शिरः सर्वपृष्ठे प्रवृणक्त्यनिपद्यमानमित्याह शारदावेवास्मा ऋतू कल्पयति रुन्धे कवीनामित्याह प्राणाः प्रति दधाति भवन्ति वाचयति चत्वारि च

## अनुवाक ७

देवस्य त्वा सवितुः प्रसव इति रशनामा दत्ते प्रसूत्यै । अश्विनोर्बाहुभ्या-मित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । आ ददेऽदित्यै रास्नासीत्याह यजुष्कृत्यै । इड एह्यदित एहि सरस्वत्येहीत्याह । एतानि वा अस्यै देवनामानि । देवनामैरेवैनामा ह्वयति । असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि १ मनुष्यनामैरेवैनामा ह्वयति । षट्सं पद्यन्ते । षड्वा ऋतवः। ऋतुभि-रेवैनामा ह्वयति । अदित्या उष्णीषमसीत्याह । यथायजुरेवैतत् । वायुर-स्यैड इत्याह । वायुदेवत्यो वै वत्सः । पूषा त्वोपावसृजत्वित्याह । पौष्णा वै देवतया पशवः २ स्वयैवैनं देवतयोपावसृजति । अश्विभ्यां प्र दापयेत्याह । अश्विनौ वै देवानां भिषजौ । ताभामेवास्मै भेषजं करोति । यस्ते स्तनः शशय इत्याह । स्तौत्येवैनाम् । उस्र घर्मँ शिँषोस्र घर्मं पाहि घर्माय शिँषे-त्याह । यथा ब्रूयादमुष्मै देहीति । तादृगेव तत् । बृहस्पतिस्त्वोप सीदत्वित्याह ३ ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनामुप सीदति । दानवः स्थ पेरव इत्याह । मेध्यानेवैनान्करोति । विष्वग्वृतो लोहितेनेत्याह व्यावृत्यै । अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पिन्वते । इन्द्राय पिन्वस्वेन्द्राय

पिन्वस्वेत्याह । इन्द्रमेव भागधेयेन समर्धयति । द्विरिन्द्रायेत्याह ४ तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः । गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमाना दत्ते । छन्दोभिरेवैनाना दत्ते । सहोर्जो भागेनोप मेहीत्याह । ऊर्ज एवैनं भागमकः । अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूताम् । आवाभ्यामेव पूर्वाभ्यां वषट्करियाता इति । इन्द्राश्विना मधुनः सारघ-स्येत्याह । अश्विभ्यामेव पूर्वाभ्यां वषट्करोति । अथो अश्विनावेव भागधेयेन समर्धयति ५ घर्मं पात वसवो यजता वडित्याह । वसूनेव भागधेयेन समर्धयति । यद्वषट्कुर्यात् । यातयामास्य वषट्कारः स्यात् । यन्न वषट्कुर्यात् । रक्षाँसि यज्ञं हन्युः । वडित्याह । परोक्षमेव वषट्करोति । नास्य यातयामा वषट्कारो भवति । न यज्ञँ रक्शाँसि घ्नन्ति ६ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह । यो वा अस्य पुण्यो रश्मिः । स वृष्टिवनिः । तस्मा एवैनं जुहोति । मधु हविरसीत्याह । स्वदयत्येवैनम् । सूर्यस्य तपस्तपेत्याह । यथायजुरेवैतत् । द्यावापृथिवीभ्यां त्वा परि गृह्णामीत्याह । द्यावापृथिवीभ्यां एवैनं परि गृह्णाति ७ अन्तरिक्षेण त्वोपयच्छामीत्याह । अन्तरिक्षेणैवैनमुप यच्छति । न वा एतं मनुष्यो भर्तुमर्हति । देवानां त्वा पितृणामनुमतो भर्तुँ शकेयमित्याह । देवैरेवैनं पितृभिरनुमत आ दत्ते । वि वा एनमेतदर्धयन्ति । यत्पश्चात्प्रवृज्य पुरो जुह्वति । तेजोऽसि तेजोऽनु प्रेहीत्याह । तेज एवास्मिन्दधाति । दिविस्पृङ्मा मा हिँसीरन्तरिक्षस्पृङ्मा मा हिँसीः पृथिविस्पृङ्मा मा हिँसीरित्याहाहिँसायै ८ सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्याह । आशिषमेवैतामा शास्ते । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । आत्मा वायुः । उद्यत्य वातनामान्याह । आत्मन्नेव यज्ञस्य शिरः प्रति दधाति । अनवानम् । प्राणानाँ संतत्यै । पञ्चाह ९ पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः प्रति दधाति । अग्नये त्वा वसुमते स्वाहेत्याह । असौ वा आदित्योऽग्नि-र्वसुमान् । तस्मा एवैनं जुहोति । सोमाय त्वा रुद्रवते स्वाहेत्याह । चन्द्रमा वै सोमो रुद्रवान् । तस्मा एवैनं जुहोति । वरुणाय त्वादित्यवते स्वाहेत्याह १० अप्सु वै वरुण आदित्यवान् । तस्मा एवैनं जुहोति । बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मण एवैनं जुहोति । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह । संवत्सरो वै सवितुर्भुमानविभुमान्प्रभुमान्वाजवान् । तस्मा एवैनं जुहोति

